

॥ श्रीसीतारामचन्द्राभ्यां नमः ॥
॥ श्रीमते रामानन्दाचार्याय नमः ॥
॥ श्रीमद्गोस्वामितुलसीदासाय नमः ॥
॥ श्रीमते अग्रदेवाचार्याय नमः ॥

# ॥ श्रीरामकृत जानकीश्रृंगारवर्णन ॥

*This text has been prepared by Vishal Pandey (B.Tech IIT Kanpur) with the blessings of*
***Chitrakūṭa Tulasīpīṭhādhiśvara Jagadguru Rāmānandāchārya Śrī Svāmī Rāmabhadrāchārya***

**सीतानाथ समारम्भां रामानन्दार्य मध्यमाम्।**
**अस्मदाचार्य पर्यन्तां वन्दे श्री गुरु परम्पराम्॥**

# श्रीरामकृत जानकीश्रृंगारवर्णन

ब्रह्मोवाच

अथ रम्यलतावृक्षवेष्टितोत्तीरभूमिकाम् ।
मन्दाकिनीं पुण्यजलां वीक्ष्य शैलाद् विनिर्गताम् ॥ १ ॥

आभाषत प्रियां रामो राजीवनयनः स्वयम् ।
पश्य प्रिये नदीमेतां सखीमिव तवाद्भुताम् ॥ २ ॥

तीरभूरुहपुष्पौघविचित्रपुलिनद्वयाम् ।
हंससारसचक्रा ह्वकादम्बशतसंकुलाम् ॥ ३ ॥

वातान्दोलिततीरस्थलताकुसुममण्डिताम् ।
विचित्रफलपुष्पाढ्यां पूजितां तीरभूरुहैः ॥ ४ ॥

क्वचित् कमलकलारकैरवादिभिरावृताम् ।
क्वचित् पीतप्रसन्नैशाकुलाध्यासितशाद्वलाम् ॥ ५ ॥

क्वचित् पीतजटाभारैर्वल्कलाजिनधारिभिः ।
कालेऽवगाढ़सलिलामृषिवर्यैस्तपोरतैः ॥ ६ ॥

आदित्यमुपतिष्ठद्भिर्नियतैरूर्ध्वबाहुभिः ।
क्वचित् संकीर्णपुलिनां मुनिभिः शंसितव्रतै ॥ ७ ॥

क्वचिन्मरुत्समान्दोललुलत्पल्लवशालिभिः ।
पादपैः सेवितोत्तीरप्रदेशां पुष्पसंकुलैः ॥ ८ ॥

क्वचित्करेणुसंलग्नमत्तद्विरदमण्डिताम् ।
महामेघघटाभारं बिभ्रतीमिव संततम् ॥ ९ ॥

पश्यैते विहगाः कूजन्त्यनुमन्दाकिनीवनम्।
पठन्त इव कामस्य दीपनं मन्त्रमुद्धुरम्॥ १०॥

पश्यैते वानरगणाः क्रीडन्ति मुदिता इव।
पाकरम्यफलास्वादपुष्टाङ्गाः काननेष्विह॥ ११॥

पश्यात्र विपिने तन्वि दृष्ट्वा त्वन्मुखमण्डलम्।
हृष्यन्ति चापि नृत्यन्ति चकोराश्चन्द्रविभ्रमात्॥ १२॥

एतेभ्यो लग्नदृष्टिभ्यो मम चित्तमसूयति।
द्विजा इति विचार्याथ मोक्तुमिच्छामि नो शरम्॥ १३॥

अथवात्रावयोरेते चिरात् संवत्सतोर्गिरौ।
बद्धसौख्याः सख्यमेव कामयन्तो विहङ्गमाः॥ १४॥

अवगाहस्वदयिते पुण्यां मन्दाकिनीमिमाम्।
सरयूनिर्विशेषेण रुचिं धत्स्वेह भामिनि॥ १५॥

कञ्जकिञ्जल्कपुञ्जेन रञ्जितां मञ्जुलामिमाम्।
भजस्व मृगशावाक्षि पुण्यां मन्दाकिनीं नदीम्॥ १६॥

इहावगाह्य सुचिरं शीततोयैर्गतक्लमा।
पद्मकिञ्जल्कपत्राद्यैर्भूषयस्व तनुं प्रिये॥ १७॥

अयोध्यासदृशं पश्य चित्रकूटमिमं प्रिये।
विना राज्यभरं तन्वि पुण्येन सुखिनो वयम्॥ १८॥

लक्ष्मणः सन्निधौ भ्रातानुकूलो मे वशंवदः।
त्वं च काञ्चनतुल्याङ्गी काम्यं मे किमतः परम्॥ १९॥

इत्थं संदर्शयन् रामो भार्याय काननं गिरिम्।
नदीं तत्पुलिनं चापि ततो निववृते चिरात्॥ २०॥

गिरेरुत्तरतः पादे चित्रकूट संचरन्।
ददर्श कन्दरामेकां रमणीयतमां द्रुमैः॥ २१॥

तां दिव्यरत्नौषधिसुप्रकाशितां विशालमाणिक्यशिलातला सनाम्।
प्रभूतपुष्पास्तरणै रलंकृतां मरुत्पतत्पल्लवतल्पशोभिताम्॥ २२॥

मनःशिलाद्यैर्गिरिधातुभिः सदा प्रभूतवालातपमञ्जुलारुणाम्।
सुखप्रचेयद्रुमवल्लरीदलैर्निवारितार्कांशुमहः समागमाम्॥ २३॥

तां दर्शयित्वा जनकात्मजायै दरीं सुवर्णोपलरत्नरम्याम्।
सुनिर्जने तत्र वने मनोज्ञे स रन्तुकामोऽवतरन् बभाषे॥ २४॥

पश्यसि प्रिये कन्दरामिमां शैलधातुभिः पूरितान्तराम्।
विस्फुरल्लतापुष्पमञ्जरीपल्लवादिभिस्तल्पशालिनीम्॥ २५॥

अत्र शंतमे निर्जने वने स्थीयतां प्रिये साधुरम्यताम्।
विस्मृता इमाः स्फाटिकीः शिला वीक्ष्य कामये त्वां विषज्जितुम्॥ २६॥

भूरिमन्मनःकामतापहृत्सम्भ्रमादिह त्वं भविष्यति।
त्वादृशीं प्रिये प्राप्य कामिनीं कस्य नो रहः क्षुभ्यते मनः॥ २७॥

अत्र कानने कोकिलारवैः काम उज्जागरो वर्ततेऽनिशम्।
इत्यहं मुहुस्त्वामनिन्दितां वीक्ष्य दर्शयाम्यात्मनो रुचिम्॥ २८॥

इत्युक्त्वा रसिकेन्द्रोऽसौप्रियामादाय पाणिना।
रहो विहर्तुं रामेन्दुः शिलां तामुपजग्मिवान्॥ २९॥

सहजानन्दिनी साक्षात्सीला शीतांशु दीधितिः ।
उवाच मृदुहासेन द्योतयन्ती वनं वचः ॥ ३० ॥

दृष्ट्वेमां संविधां नाथ वनेऽपि स्वेष्टकारिणीम् ।
मनो मे प्रीयतेऽत्यर्थं तव संनिधिनिर्वृतम् ॥ ३१ ॥

यदाज्ञापयसि प्रेष्ठ तत्तथैव मतं मम ।
कन्दरामन्दिरं ह्येतद् रन्तुमेवोचितं प्रिय ॥ ३२ ॥

इति ब्रुवाणां वैदेहीं लोकोत्तरगुणान्विताम् ।
स्मितमाञ्जुल्यशोभाभी रञ्जयन्तीं दिशो दश ॥ ३३ ॥

अब्रवीदधिकं चेतो लोभयन् केलिपण्डितः ।
विभूतिरेषा पञ्चेषोः काननेऽस्मिन् प्रसृत्वटी ॥ ३४ ॥

शीतलः सुरभिमन्द आयात्येष समीरणः ।
अग्रेसर इवामन्दशासनः स्मरभूपतेः ॥ ३५ ॥

लतालिङ्गितदोःशाखा अमीहि वन भूरुहः ।
निर्दिशन्ति जयं नित्यमनङ्गस्य प्रसर्पतः ॥ ३६ ॥

इमाः कुसुमिताः शश्वत्फलभारनता लताः ।
तरुण्य इव कम्पन्ते वातेनेव मनोभुवा ॥ ३७ ॥

इति ब्रुवत एवास्य शिलातलनिषादिनः ।
आरुरोहाङ्कमागत्य सीता शिञ्जितनूपुरा ॥ ३८ ॥

रमयामास तां रामो रसिकेन्द्रो रसाकुलाम् ।
चञ्चलामिव चार्वङ्गीं क्रीडन्तीमङ्कमध्यगाम् ॥ ३९ ॥

चिरं विपरिवर्तन्ती तडित्कोटिसमाकृतिः ।
मोदयामासः रमणं नवीनमिव मन्मथम् ॥ ४० ॥

चिरं विहृत्य वैदेह्या भगवान् रतिवर्द्धनः ।
अशोभत शिलापृष्ठे पौलोम्येव पुरन्दरः ॥ ४१ ॥

अथ शृङ्गारयामास प्रियां विस्रस्तभूषणाम् ।
चम्पकैर्गुम्फयामास वेणीमलकशालिनीम् ॥ ४२ ॥

अलकेषु वबन्धास्याः केशरस्य सुमान्यलम् ।
चक्रे कमलपत्रैश्च कञ्चुकीं कुचकुम्भयोः ॥ ४३ ॥

सनालैः पङ्कजैश्चक्रे वाह्वोः केयूरयुग्मकम् ।
विचित्र पुष्पस्तबकैर्भूषाः कल्पितवान् पृथक् ॥ ४४ ॥

पञ्चवर्णप्रसूनाढ्यां स्रजं कमलशालिनीम् ।
वक्षसि न्यस्तवान् रामो रमण्याः स वशंवदः ॥ ४५ ॥

हरितालरसैर्मिश्रां सिन्दूराक्तां मनः शिलाम् ।
संघृष्य रमणोऽङ्गुल्या भालेतिलकमातनोत् ॥ ४६ ॥

विभूष्य स्वामिनीमेष स्वयं चाभूषितस्तया ।
रेजाते ताबुभौ तत्र शोभमानौ परस्परम् ॥ ४७ ॥

इत्थं चिरं कन्दरायां चित्रकूटमहीभृतः ।
क्रीडित्वा प्रेयसीयुक्तो निर्जगाम ततः शनैः ॥ ४८ ॥

मध्येमार्गमियं प्राप्ता प्रेयसी प्रेयसान्विता ।
राजहंसगतिः श्यामा रेजे रञ्जितमानसा ॥ ४९ ॥

पश्यन्ती मृगशावाक्षी मार्गे वानरयूथयान्।
वराहान् महिषांश्चैव मातङ्गान् वनचारिणः ॥ ५० ॥

विभ्यती तत्र तत्रासौ चकितैणाविलोचना।
परिरेभे प्रियं धन्या वीरमात्तधनुः शरम् ॥ ५१ ॥

रामः प्रियां परीरम्भसुखमीलितलोचनाम्।
स्वयं च परिरेभे तां द्विगुणोद्भूतमन्मथः ॥ ५२ ॥

भर्त्सयन् वारयन् हिंस्रान् दुर्जीवान् वनचारिणः।
निनाय प्रेयसीं रामः संफुल्लाशोकवाटिकाम् ॥ ५३ ॥

तत्राशोकतरुप्रसूनविसरैरन्योन्यमाभूषिता
वन्योन्यं गिरिधातुपल्लवकृताकल्पौ प्रभूतश्रियो।
आबद्धातुलबर्हचन्द्रककृतापीडावतंसोज्वलौ
शोभन्त्या वनमालयातिरुचिरौ लोकोत्तरं रेजतुः ॥ ५४ ॥

दर्शयित्वा तु विविधान् देशानद्रौ विहृत्य च।
उपावर्तत जानक्या सहितो निजमाश्रमे ॥ ५५ ॥

यत्र श्रीमान् सुमित्रा तनय उचितकृच्छुद्धबाणेन हत्वा
मेध्यान् वै कृष्णसारान् दशभृशमपचद् भूरिभेदान् प्रवीणः।
कांश्चित्संशुष्यमाणान् शुचिमृदुपललान् पर्यरक्षच्चिरेण
प्राप्तं प्रत्युज्जगाम प्रणिहितधिषणः प्रेयसीयुक्तमार्यम् ॥ ५६ ॥

**॥ इति श्रीमदादिरामायणे ब्रह्मभुशुण्डसंवादे दक्षिणखण्डे चित्रकूटकन्दराविहारो नाम सप्तदशोऽध्यायः ॥**